## ४ तेजोत इत्यधिकरणम् ।

### तेजोतस्तथा ह्याह ॥ २।३।१० ॥

तेजोतो वायुतः । तथा ह्याह । वायोरग्निः (तै.२।१) इति श्रुतेः ।

हिशब्देनैवमाह । छान्दोग्यश्रुतिः प्रतिज्ञाहानिनिराकरणार्थं तैत्तिरीयकमपेक्षते वाय्वाकाशयोरुत्पत्त्यर्थम् । तथा चोपजीव्यस्य प्राधान्याद् वायुभावापन्नमेव सत्तेजस उत्पादकमिति स्वीकरोति । ब्रह्मण एव सर्वोत्पत्तिपक्षस्त्वविरुद्धः ॥ २।३।१०॥४ ॥

## ५ आप इत्यधिकरणम् ।

### आपः ॥ २।३।११ ॥

तथा ह्याहेत्येव । इदमेकमनुवादसूत्रमविरोधख्यापकम् । न श्रुत्योः सर्वत्र विरोध इति ॥ २।३।११।५ ॥

## ६ पृथिव्यधिकारेत्यधिकरणम् ।

### पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ २।३।१२ ॥

ता आप ऐक्षन्त बव्ह्यः स्याम प्रजायेमहि (छां.६।२।४) इति । ता अन्नमसृजन्त (छां.६।२।४) इति । तत्रान्नशब्देन व्रीह्यादय आहोस्वित्पृथिवीति संदेहः । ननु कथं संदेहः पूर्वन्यायेनोपजीव्यश्रुतेर्बलीयस्त्वादिति चेत् । उच्यते । अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योन्नम् (तै. २।१) इत्यग्रे वर्तते । तथा सति पृथिवीमोषधीश्च सृष्टाव पोन्नं सृजति । आहोस्विदन्नशब्देनैव पृथिवीति ।

नन्वेवमस्तु पृथिव्योषधिसृष्टयनन्तरमन्नसृष्टिरिति चेत् । न । छान्दोग्यश्रुतेरपेक्षाभावान्महाभूतमात्रस्यैवाभिलषितत्वात् । एकपदलक्षणापेक्षया तत्स्वीकारस्यगुरुत्वात्पूर्वोक्त एव संशयः । तत्रान्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् (छां. ६।५।४) इति त्रयाणां सहचारः संर्वत्रोपलभ्यते । लोकप्रसिद्धिर्वर्षणभूयिष्ठालिङ्गं च । तस्मात्पृथिव्योषध्यन्नानां मध्ये भेदविवक्षया चत्किंचिद्धक्तव्येन्नमुक्तमित्यवं प्राप्ते ।

उच्यते । अन्नशब्दे पृथिवी । कुत: । अधिकाररूपशब्दान्तरेभ्य: । अधिकारो भूतानामेव । न भौतिकानाम् । नीलं च रुपं पृथिव्या एव ।

भूतसहपाठात् । शब्दान्तरमद्भ्य: पृथिवीति । तस्मादन्नशब्देन पृथिव्येव ॥ २।३।१२॥६॥

### ७ तदभिध्यानादेवेत्यधिकरणम् ।

**तदभिध्यानादेव तु तल्लिङ्गात्स: ॥ २।३।१३ ॥**

आकाशादेव कार्याद्वाय्वादिकार्योत्पत्तिं तुशब्दो वारयति । स एव परमात्मा वाय्वादीन् सृजति । कथं तच्छब्दवाच्यतेति चेत्तदभिध्यानात् । तस्य तस्य कार्यस्योत्पादनार्थं तदभिध्यानं ततस्तदात्मकत्वं तेन तद्वाच्यत्वमिति । ननु यथाश्रुतमेव कुतो न गृह्यत इत्यत आह । तल्लिङ्गात् । सर्वकर्तृत्वं लिङ्गं तस्यैव सर्वत्र वेदान्तेष्ववगतम् । जडतो देवताया वा यत्किंचिज्जायमानं तत्सर्वं ब्रह्मण एवेति सिद्धम् ॥ २।३।१३।७ ॥

### ८ विपर्ययेणेत्यधिकरणम् ।

**विपर्ययेण तु क्रमोत उपपद्यते ॥ २।३।१४ ॥**

यथोत्पत्तिर्न तथा प्रलय: किंतु विपर्ययेण क्रम: । अत उत्पत्त्यनन्तरं प्रलय: । कुत: । उपपद्यते । प्रवेशविपर्ययेण हि निर्गमनम् । क्रमसृष्टावप्येतत् ॥ २।३।१४ ॥८ ॥

### ९ अन्तरा विज्ञानमनसी इत्यधिकरनम् ।

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २।३।१५ ॥**

तैत्तिरीयक आकाशाद्यन्नपर्यन्तमुत्पत्तिमुक्त्वान्नमयादयो निरूपिता: । तत्रान्नमयस्य प्राणमयस्य च सामग्री पूर्वमुत्पन्नोक्ता । आन्दमयस्तु परमात्मा मध्ये विज्ञानमनसी विद्यमाने क्वचिदुत्पन्ने इति वक्तव्ये तत्र क्रमेणोत्पन्ने इति वक्तव्यम् । क्रमस्तु प्रातिलोम्येन । सूत्रे विपर्ययानन्तरकथनात् । अन्तरेति च वचनात् । तेजोबन्नानामन्नमये गत्वात् ।

वाय्वाकाशयो: प्राण एव गतत्वात् । आकाशात्पूर्वं विज्ञानमनसी उत्पन्ने इति वक्तव्यम् । तयोरग्रे वचनमेव लिङ्गमिति । अतस्तयोरुत्पत्तिर्वक्तव्येति चेन्न । अविशेषात् । नामरूपविशेषवतामेवोत्पत्तिरुच्यते न त्वनयो: । विज्ञानमयस्य जीवत्वान्मनोमयस्य च वेदत्वात् । अतो भूतभौतिकप्रवेशाभावान्न तयोरुत्पत्तिर्वक्तव्या ॥ २।३।१५ ॥

**चराचरव्यपाश्रयस्तु स्यात्तव्द्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ २।३।१६ ॥**

ननु विज्ञानमयस्य जीवस्यानुत्पत्तौ सर्वव्यवहारोच्छेद: । उत्पत्तिस्तु त्रिविधा निरूपिता । अनित्ये जननं नित्ये परिच्छिन्ने समागम (आ.का.२८) इति । तथा च जीवस्य समागमलक्षणाप्युत्पत्तिर्न स्यादितीमामाशङ्कां निराकरोति तुशब्द: । चराचरे स्थावरजङ्गमे शरीरे तयोर्विशेषेणापाश्रय आश्रय: शरीरसंबन्ध इति यावत् । स तु स्यान्न तु स्वत: । ननु शरीरस्योत्पत्तौ जीवोप्युत्पद्यते । अन्यथा जातकर्मादीनामभावप्रसंगादिति चेन्न । तव्द्यपदेशस्तस्य शरीरस्य जन्ममरणधर्मवत्त्वेन जीवव्यपदेशो भाक्तो लाक्षणिक: । कुत: । तद्भावभावित्वात् । शरीरस्यान्वयव्यतिरेकाभ्यामेव जीवस्य तद्भावित्वम् । देहधर्मो जीवस्य भाक्त: । तत्संबन्धेनैवोत्पत्तिव्यपदेश इति सिद्धम् ॥ २।३।१६ ॥९॥

**१० नात्माश्रुतेरित्यधिकरणम् ।**

**नात्माश्रुतेर्नित्यत्वाच्च ताभ्य: ॥ २।३।१७ ॥**

ननु जीवोप्युत्पद्यतां किमिति भाक्तत्वं कल्प्यत इति चेत् । न । आत्मा नोत्पद्यते । कुत:।अश्रुते: । न ह्यात्मन उत्पत्ति: श्रूयते । देवदत्तो जातो विष्णुमित्रो जात इति देहोत्पत्तिरेव । नतु तव्द्यतिरेकेण पृथग् जीवोत्पत्ति: श्रूयते । विस्फुलिङ्गवदुच्चरणं नोत्पत्ति:। नामरूपसंबन्धाभावात् । एतस्य गुणा: स्वरूपं चाग्रे वक्ष्यते । किंच । नित्यत्वाच्च ताभ्य:. श्रुतिभ्य: । अयमात्माजरोमर: (बृ.४।४।२५) न जायते म्रियते (कठ.१।२।१८) इत्येवमादिभ्य: ॥ २।३।१७ ॥ १० ॥

## ११ ज्ञोत एवेत्यधिकरणम् ।

गुणान्निरूपयन्प्रथमतश्चैतन्यगुणमाह ।

### ज्ञोत एव ॥ २।३।१८ ॥

ज्ञश्चैतन्यस्वरूपः । अत एव श्रुतिभ्यो विज्ञानमय इत्यादिभ्यः । सर्वविप्लववादी ब्रह्मवाक्यान्युदाहृत्य सूत्रोक्तसिद्धान्तमन्यथाकृत्य श्रुतिसूत्रोल्लङ्घनेन प्रगल्भते । स वक्तव्यः । किं जीवस्य ब्रह्मत्वं प्रतिपाद्यते जीवत्वं वा निराक्रियत इति । आद्य इष्टापत्तिः । न हि विस्फुलिङ्गोम्न्यंशो भूत्वा नाग्निः । द्वितीये स्वरूपनाशः । जीवत्वं कल्पितमिति चेन्न । अनेन जीवनोत्मना (छां.६।३।२) अधिकं तु भेदनिर्देशात् (ब्र.सू. २।१।२२) इति श्रुतिविरोधात् । न चानादिरयं जीवब्रह्मविभागो बुध्धिकृतः । प्रमाणाभावात् । सदेव सोम्येदमग्र आसीदे क येवा द्वितीयम् (छां.६/२/१) इति श्रुतिविरोधश्च । न च जीवातिरिक्तं ब्रह्म नास्ति । सर्वश्रुतिसूत्रनाशप्रसंगात् । यः सर्वज्ञः सर्वशक्तिः । अयमात्मा पहतमाप्मा (छां.८/१/५)

## १२ उत्क्रान्तिगत्यागतीनामित्यधिकरणम् ।

### उत्क्रान्तिगत्यागतीनाम् ॥ २।३।१९ ॥

अत एवेति वर्तते । स यदास्माच्छरीरादुत्क्रामति स हैवैतैः सर्वैरुत्क्रामति । ये के चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ.३/३) इति । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे । श्रुत्युक्तानामुत्क्रान्तिगत्यागतीनां श्रवणाद्यथायोग्यं तस्य परिमाणङ्गीकर्तव्यम् यद्यपि - आराग्रमात्रो ह्यपरोपि दृष्टः (श्वे.५/८) इतिश्रुत्यैव परिमाणमुक्तं तथापि बहुवादिविप्रतिपन्नत्वाद् युक्तिभिः साधयति । बह्मवैलक्षण्यार्थमुत्कान्तिपूर्वकत्वमुक्तम् ॥ २।३।१९ ॥

### स्वात्मना चोत्तरयोः ॥ २।३।२० ॥

उत्क्रान्तिगत्यागतीनां संबन्ध इन्द्रियादिभिः परिष्वङ्गोप्यस्ति । ततः संदेहोपि भवेत् किमुपाधित एतेषां संबन्धो भवेत्स्वतो वेति ॥

उत्तरयोर्गत्यागत्योः स्वात्मना केवयलस्वरूपेण ॥

ऊर्णनाभिर्यथा तन्तून्सृजते संचरत्यपि ।

जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥

ब्रह्मोपनिषत् । अनेन जीवेनात्मानुप्रविश्य ब्रह्माप्येति । कामरूप्यनुसंचरन् (तै.उ.३।१०) इति वा ।

अथवोत्क्रान्तिगत्यागतीनां जीवसंबन्ध एव बोध्यते नाणुत्वम् । स्वात्मना चोत्तरयोरित्यणुत्वम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् (म.भा.३।२९७।१७) इत्युत्क्रमे गत्यतिरिक्ते स्वातन्त्र्यभावात् । स्वात्मना जीवरूपेण चकारादिन्द्रियैश्च गत्यागत्योः संबन्धी जीव इत्यर्थः । अतो मध्यपरिमाणमयुक्तमित्यणुरेव भवति ॥ २।३।२०॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २।३।२१ ॥

जीवो नाणुर्भवितुमर्हति । कुतः । अतच्छ्रुतेः । अणुत्वविपरीतव्यापकत्वश्रुतेः । स वा एष महानज आत्मा योयं विज्ञानमयः (बृ.४।४।२२) इति चेन्न । इतराधिकारात् । इतरः परं ब्रह्म । तस्याधिकारे महानज इति वाक्यम् । प्रकरणेन शब्दाश्च नियम्यन्ते । अन्यपरा अपि योगेन ब्रह्मपरा भविष्यन्ति ॥ २।३।२१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २।३।२२ ॥

स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति (बृ.४।३।९) इति स्वशब्दोणुपरिमाणं जीवं बोधयति । न हि स्वप्ने व्यापकस्य वा शरीरपरिमाणस्य वा विहरणं संभवति । वालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेयः (श्वे.५/८) इति आराग्रमात्रो ह्यपरोपि दृष्टः (श्वे.५/८) इति चोन्मानम् । चकारात्स्वप्नपबोधयोः संधावागतिदर्शनम् ॥ २।३।२२ ॥

## अविरोधश्चन्दनवत् ॥ २।३।२३ ॥

अणुत्वे सर्वशरीरव्यापि चैतन्यं न घटत इति विरोधो न भवति चन्दनवत् । यथा । चन्दनमेकदेशस्थितं सर्वदेहसुखं करोति महातप्ततैलस्थितं वा तापनिवृत्तिम् ॥ २।३।२३॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २।३।२४॥

चन्दनेवस्थितिवैशेष्यमनुपहतत्वचि सम्यक्तयावस्थानं तस्मात् । त्वच एकत्वात् तत्र भवतु नाम नतु प्रकृते तथा संभवतीति चेन्न । अभ्युपगमात् । अभ्युपगम्यते जीवस्यापि स्थानविशेषः । हृदि हि । हृदि जीवस्य स्थितिः । गुहां प्रविष्टाविति हि युक्तिः ॥ २।३।२४ ॥

## गुणाद्वालोकवत् ॥ २।३।२५॥

जीवस्य हि चैतन्यं गुणः स सर्वशरीरव्यापी । यथा मणिप्रवेकस्य कान्तिर्बहुदेशं व्याप्प्नोति तद्वत् । प्रभाया गुणत्वमेव स्पर्शानुपलम्भात् । उदकगतौष्ण्यवत् । न च विजातीयस्यारम्भकत्वं प्रमाणाभावात् लोकप्रतीतिस्तु सर्वैर्वादिभिरुपपाद्या । तत्र गुणिकल्पनापेक्षया गुण एव स्थलान्तर आरभ्यत इति कल्प्यताम् । तथैव लोकप्रतीतेः । पुष्परागादेरपि प्रभारूपमेव तावद्देशं व्याप्नोतीति मणिस्वावादेवाङ्गीकर्तव्यम् । आरम्भकस्य तेजसस्तत्राभावात् । कान्तिः प्रभा रूपमिति हि लोके पर्यायः । वाशब्दो यथालोकं युक्तिः कल्पनीयेति सूचयति । ब्रह्मसिद्धान्ते तु यथैव लोके दृश्यते तथैव ब्रह्मणो जातमिति न कल्पनालेशोपि ॥ २।३।२५ ॥

## व्यतिरेको गन्धवत् ॥ २।३।२६ ॥

सिद्धां दृष्टान्तमाह । यथा चम्पकादिगन्धश्चम्पकव्यवहितस्थलेप्युपलभ्यते वेदोक्तत्वादस्य दृष्टान्तत्वम् । यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो यात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति (ना.११) इति । अन्यथा कल्पना त्वयुक्तेत्यवोचाम ॥ २।३।२६ ॥

## तथा च दर्शयति । २।३।२७॥

हृदयायतनमणुपरिमाणत्वं चात्मनोभिधाय तस्यैवालोमभ्य आनखाग्रेभ्य इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २।३।२७॥

**पृथगुपदेशात् ॥ २ ।३ ।२८ ॥**

प्रज्ञया शरीरं समारुह्य (कौ.३/६) इति करणत्वेन पृथगुपदेशाच्चैतन्यं गुण: ॥ २ ।३ ।२८ ॥ १२ ॥

**१३ तद्गुणसारत्वादित्यधिकरणम् ।**

**तद्गुणसारत्त्वात्तु तद्व्यपदेश: प्राज्ञवत् ॥ २ ।३ ।२९ ॥**

ननु तत्त्वमस्यादिवाक्यै: परमेव ब्रह्म जीव इति कथमणुत्वमितीमाशङ्कां निराकरोति तुशब्द: । तस्य ब्रह्मणो गुणा: प्रज्ञाद्रष्टृत्वादयस्त एवात्र जीवे सारा इति जडवैलअण्यकारिण इत्यमात्ये राजपदप्रयोगवज्जीवे भगवद्व्यपदेश: । मैत्रेयीति संपूर्णे ब्राह्मणे भगवत्त्वेन जीव उक्त: ।

ननु कथमन्यस्यान्यधर्मसवत्त्वेन कथनम् । नहि निरूपणस्थल एवोपचार: संभवति । तत्राह । प्राज्ञवत् । तद्यथा प्रियया स्त्रिया संपरिष्वक्त: (बृ.४ ।३ ।२१) इत्यत्र-एवमेवायं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्त: (बृ.४ ।३ ।२१ ) इत्यभिधाय प्राज्ञस्वरूपमाह । तद्वा अस्यैतदतिच्छन्दोपहतपाप्माभयं रूपमशोकान्तरमत्र पिता अपिता भवति (बृ.४ ।३ ।२२) इत्यादि । प्राज्ञश्च सुषुप्तसाक्षी । न हि तस्यापहतपाप्मत्वमस्ति बह्मलिङ्गात् । एवमेव शारीरस्यापि जीवस्य ब्रह्मधर्मबोधिका: श्रुतय: ।

इदमत्र वक्तव्यम् । सर्वोपनिषत्सु ब्रह्मज्ञानं परमपुरुषार्थसाधनमिति तन्निर्णयार्थं भगवान् व्यास: सूत्राणि चकार । तत्र ब्रह्मसूत्रे विचारं प्रतिज्ञाय जगत्कर्तृत्वाद्यसाधारणलक्षणं ब्रह्मण: प्रतिज्ञाय समन्वयनिरूपणे जीववाक्यानि दूरीकृत्याविरोधे ऐक्येप्यहिताकरणादिदोषमाशङ्क्य - अधिकं तु भेदनिर्देशात् (ब्र.सू.२ ।१ ।२२ ) इति परिहृत्य जीवस्यादिकंणुत्वमुपचाराद् ब्रह्मत्वमंशत्वं पराधीनकर्तृत्वा प्रति पाद्य तस्यैव दक्षिणमार्गेण पुनरावृत्तिमुक्त्वा ससाधनेन ब्रह्मज्ञानेनार्चिरादिद्वारा ब्रह्मप्राप्तिमुक्त्वा - न स पुनरावर्तते (कालाग्नि.२) इत्यनावृत्तिं वदञ् छास्त्रपर्यवसानेन सर्वान् वेदान्तानव्याकुलतया योजितवान् ।

तत्र कश्चित् तव्द्यपदेशेन प्रोक्तानि तत्त्वमस्यादिवाक्यानि स्वीकृत्य तदतिरिक्तस्य सर्वस्य कारणांशकार्यरूपस्य मिथ्यात्वं परिकल्प्य तद्बोधकश्रुतीनामर्थवादत्वेन मिथ्यात्वं स्वीकृत्य सुषुप्तिसंपत्योर्भगवता प्रकटीकृत मानन्दरूपत्वं तत्प्रत्तिपादकवाज्यानां सद्योमुक्तिरूपफलवाचक त्वमुक्त्वा क्रममुक्तिमुपासना परत्वेन । योजयित्वा वेदसूत्राणि व्याकुलीचकार । तद् वेदान्तानां ब्रह्मपरत्वं जीवपरत्वं वेति यदत्र युक्तं तत्सद्भिरनुसंधेयम् ॥ २।३।२९ ॥

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २।३।३० ॥**

ननु कथमन्यस्य नीचस्य सर्वोत्कृष्टव्यपदेशोपि । न हि प्रामाणिकैः सर्वथायुक्ते व्यपदेशः कियते । न चोक्ततद्गुणुसारत्वाद् ब्रह्मण आनन्दांशस्य प्राकट्यादिति॰वाच्यम् । तथा सति प्राङ्नवत्पुनास्तिरोहितं स्यादिति तस्य तव्द्यपदेशो व्यर्थोयुक्तश्चेति चेत् । नायं दोषः । कुतः । यावदात्मभावित्वात् । पश्चाद्यावत्पर्यन्तमात्मा नित्यत्वात् । सर्वदानन्दांशस्य प्राकट्यात् । तस्य तथैव दर्शनमस्ति । अनावृतैश्वर्यादीनामुक्तत्वात् । प्राज्ञात्संपन्नत्वं विशेषः । चकारात्तस्य चानन्दः प्रकटित इति न दूषणगन्धोपि ।

व्यपदेशो वा नात्यनतमयुक्ततस्य । यावदात्मा बह्म भवत्यानन्दांशप्राकटयेन तावदेव

> तव्द्यपदेशः । राजज्येष्ठपुत्रवत् । एतदेवोक्तम् ।
> व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते ॥२९॥
> आनन्दांशा भिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः॥
> प्रतीयेरन्परिच्छेदो व्यापकत्वं च तस्य तत् ॥३०॥

इति ॥ २।३।२० ॥

**पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ २।३।३१ ॥**

व्यपदेशदशायामप्यानन्दांशस्य नात्यन्तमसत्त्वम् । पुंस्तवादिवत् । यथा पुंस्त्वं सेकादिसामर्थ्यं बाल्ये विद्यमानमेव यौवने प्रकाशते तथानन्दांशस्यापि सत एव व्यक्तियोगः ॥ २।३।३१ ॥

**नित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमो वान्यथा ॥ २ ।३ ।३२ ॥**

ननु कथमेवं स्वीक्रियते । इदानीं संसारावस्थायां सच्चित्प्राकट्यमेव । मोक्षे त्वानन्दांशोपि प्रकट इति तन्नियारयति । तथा सति नित्यमुपलब्धि: स्यादानन्दांशस्य । तथा सति न संसारावस्थोपपद्यते । अथा नुपलब्धि: सर्वदा तथा सति मोक्षदशा विरुध्येत । अथान्यतरनियम: । जीवो निरानन्द एव ब्रह्म त्वानन्दरूपम् । तथा सति ब्रह्मैव सन् ब्रह्माप्येति (बृ.४ ।४ ।६) इति श्रुतिविरोध: । तस्मात्पूर्वोक्त एव प्रकार: स्वीकर्तव्य इति सिद्धम् ॥ २ ।३ ।३२॥ १३ ॥

**१४ कर्ता शास्त्रार्थवत्त्वादित्यधिकरणम् ।**

**कर्ता शास्त्रार्थवत्त्वात् ॥ २ ।३ ।३३ ॥**

सांख्यानां प्रकृतिगतमेव कर्तृत्वमिति तन्निवारणार्थमधिकरणारम्भ: । कर्ता जीव एव । कुत:। शास्त्रार्थवत्त्वात् । जीवमेवाधिकृत्य वेदेभ्युदयनि:श्रेयसफलार्थं सर्वाणि कर्माणि विहितानि ब्रह्मणोनुपयोगात् । जडस्याशक्यत्वात् । संदिग्धेपि तथैवाङ्गीकर्तव्यम् ॥ २ ।३ ।३३॥

**विहारोपदेशात् ॥ २ ।३ ।३४ ।**

तस्यैव गान्धर्वादिलोकेषु - यद्यत्कामयते तत्तद्भवति - इति विहार उपदिष्ट: । ततश्च कर्तृत्वभोक्तृत्वयो: साधुकारी साधुर्भवति - इति सामानाधिकरण्यश्रवणाज्जीव एव कर्ता ॥ २ ।३ ।३४॥

**उपादानात् ॥ २ ।३ ।३५ ॥**

तदेषां प्राणानां विज्ञानेन विज्ञानमादाय (बृ.२ ।१ ।१७) इति जीवेन सर्वेषां विज्ञानमुपादीयते । तस्मादिन्द्रियादीनां करणत्वमेव । स्वातन्त्र्यादस्यैव कर्तृत्वम् । यस्तु मन्यते बुद्धिसंबन्धाजीवस्य कर्तृत्वमिति । स्वातन्त्र्यादस्यैव कर्तृत्वम् । यस्तु मन्यते बुद्धिसंबन्धाज्जीवस्य कर्तृत्वमिति । स प्रष्टव्य: । किं बुद्धिकर्तृत्वं जीवे समायाति । अथवा जीवगतमेव कर्तृत्वं बुद्धिसंबन्धादुद्गच्छति । अथवा शशविषाणायितमेव कर्तृत्वं संबन्धे समायाति । नाद्य: । जडत्वात् अनङ्गीकारात्पूर्वं निराकृतत्वाच्च । द्वितीये त्विष्टापत्ति:

उपादानविरोधश्च । तृतीये शास्त्रविरोध: ब्रह्मणि सिद्धत्वाच्च। असत्कार्यस्य निराकृतत्वात् । सर्वविपलवस्तु माध्यमिकवदुपेक्ष्य: ॥ २।३।३५ ॥

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥२ । ३ । ३६ ॥**

व्यपदेशो - विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च (तै.२।५) इति । अत्र सांख्ये बुद्ध्यादीनामेव कर्तृत्वं न जीवस्येति क्रियायां यागादिकर्मसु न तु भोगे । जीवस्य कर्तृत्वं न चेत् *। न तथा सति निर्देशस्य विपर्ययो भवेत् । विज्ञानेन विज्ञानमादाय* (बृ.२।१।१७) इति श्रुत्यनुरोधात् । प्रकृनेपि तृतीयान्ततापद्येत । अथ स्वव्यापारे कर्तृत्वं तथापि पूर्वनिर्देशस्य विज्ञानमयस्य विपर्ययः स्थान् । विकारित्वं स्यात् । तच्चासंगतम् त्र्यच्त्वात् । विज्ञानमादायेत्यत्र । विपर्यय एवैकस्य प्रदेशभेदेनार्थभेदोपि । भगवति सर्वे शब्दाः स्वभावत एव प्रवर्तन्ते । औपचारिकत्व - ज्ञापकाभावात् । यज्ञो यजमान इति श्रद्धादीनां शिरस्त्वादिः । तस्माद्विज्ञानमयो जीव एव जडस्य स्वातन्त्र्याभावान्न कर्तृत्वम् ॥ २। ३। ३६॥

**उपलब्धिवदनियम: ॥ २।३।३७ ॥**

ननु जीवस्य कर्तृत्वे हिताकरणादिदोषप्रसक्तिरिति चेत् । न । उपलब्धिवदनियमः । यथा चक्षुषेष्टमनिष्टं चोपलभत एवमिन्द्रियैः कर्म कुर्वन्निष्टमनिष्टं वा प्राप्नोति ॥२।३।३७॥

**शक्तिविपर्ययात् ॥ २।३।३८ ॥**

नन्वीश्वरवत्स्वार्थमन्यथा न कुर्यादिति चेत् । शक्तिविपर्ययात् । तथा सामर्थ्याभावात् । इत एव दैवादहितमपि करोति ॥ २।३।३८ ॥

**समाध्यभावाच्च ॥ २।३।३९ ॥**

जीवस्य क्रियाज्ञानशक्ती योगेन सिध्यत: । समाध्यभावाच्छक्त्यभाव इत्यर्थः । चकारात्तादृशमन्त्राभावोपि । न च सहजकर्तृत्वेनिर्मोक्षः । पराधीनकर्तृत्वं एवैतदिति सांख्यस्य तन्मतानुसारिणो वान्यस्य भ्रम एव । कर्तृत्वे न मुक्तिरिति । नपुंसक एवमुच्येतेति

बाह्यवत् । निरिन्द्रयस्यैव समाधिरित्यपि । करणत्वेन बुद्धिवन्न केनापि दूष्यते । तस्माज्जीवस्य स्वभाविकं कर्तृत्वम् । ध्यायतीव लेलायतीव (बृ.४।३।७) इत्यपि परधर्मानुकरणम् । अयमप्येको धर्म: ।

स्वाप्ययसंपत्योर्ब्रह्मन्यपदेशं पुरस्कृत्य सर्वविप्लवं वदन्नुपेक्ष्य: ॥ २।३।३९ ॥

**यथा च तक्षोभयथा ॥ २।३।४० ॥**

ननु कर्मकारिणां कर्तृत्वभोक्तृत्वभेदो दृश्यते तत् कर्तृभोक्तृ त्वयोर्भेदो भविष्यतीति चेन्न । यथा तक्षा रथं निर्माय तत्रारूढो विहरति पीठं वा । स्वतो वा न व्याप्रियते वाश्यादिद्वारेण वा । चकरादन्येपि स्वार्थकर्तार: । अन्यार्थमपि करोतीति चेत्तथा प्रकृतेपि । सर्वहितार्थं प्रयतमानत्वात् । न च कर्तृत्वमात्रं दु:खरूपम् । पय:पानादे: सुखरूपत्वात् । तथा च स्वार्थपरार्थकर्तृत्वं कारयितृत्वं च सिद्धम् ॥ २।३।४०॥१४॥

**१५ परात्तु तच्छ्रुतैरित्यधिकरणम् ।**

**परात्तु तच्छ्रुते: ॥ २।३।४१ ॥**

कर्तृत्वं ब्रह्मगतमेव । तत्संबन्धादेव जीवे कर्तृत्वं तदंशत्वादैश्वर्यादिवत् । न तु जडगतमिति । अतो-नान्योतोस्ति (बृ.४।३।२२) इति सर्वकर्तृत्वं धटते । कुत एतत् । तच्छ्रुते: । तस्यैव कर्तृत्वकारयितृत्वश्रवणात् । यमधो निनीषति तमसाधु कारयति (कौ.३/९) इति । सर्वकर्ता सर्वभोक्ता सर्वनियन्तेति । सर्वरूपत्वांन्न भगवति दोष: ॥२।३।४१॥

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य: ॥२।३।४२॥**

ननु वैषम्यनैर्घृण्ययोर्न परिहार: । अनादित्वेन स्वस्यैव कारयितृत्वादिति पक्षं तुशब्दो निवारयति । प्रयत्नपर्यन्तं जीवकृत्यम् । अग्रे तस्याशक्यत्वात्स्वयमेव कारयति । यथा बालं पुत्रं यतमानं पदार्थगुणदोषौ वर्णयन्नपि तत्प्रयत्नाभिनिवेशं दृष्ट्वा तथैव कारयति । सर्वत्र तत्कारणत्वाय तदानीं फलदातृत्वे येच्छा तामेवानुवदति । उन्निनीषति । अधोनिनीषतीति । अन्यथा विहितप्रतिषिद्धयोर्वैयर्थ्यापत्ते: । अप्रामाणिकत्वं च । फलदाने कर्मपेक्ष: । कर्मकारणे प्रयत्नापेक्ष: । प्रयत्ने कामापेक्ष: कामे प्रवाहापेक्ष इति मर्यादारक्षार्थे

वेदं चकार । ततो न ब्रह्माणि दोषगन्धोपि । न चानीश्वरत्वम् । मर्यादामार्गस्य तथैव निर्माणात् । यत्रान्यथा स पुष्टिमध्य इति ॥ २।३।४२॥१५॥

### १६ अंशो नानाव्यपदेशादित्यधिकरणम् ।

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥२।३।४३॥**

जीवस्य ब्रह्मसंबन्धि रूपमुच्यते । जीवो नाम ब्रह्मणोंशः । कुतः । नानाव्यपदेशात्। सर्व एवात्मानो व्युच्चरन्ति कपूयचरणा रमणीयचरणाः इति च । ननु ब्रह्मणो निरवयवत्वात्कथं जीवस्यांशत्वमिति वाच्यम् । न हि ब्रह्म निरंशं सांशमिति वा क्वचिल्लोके सिद्धम्। वेदैकसमधिगम्यत्वात् । साच श्रुतिर्यतोपपद्यते तथा तदनुल्लङ्घनेन वेदार्थज्ञानार्थं युक्तिर्वक्तव्या । सा चेत्स्वयं नावगता तपो विधेयम् । अभिज्ञा वा प्रष्टव्या इति । न तु सर्वविप्लवः कर्तव्य इति ।

तत्रैषा युक्तिः ।

विस्फुलिङ्गा इवाग्नेर्हि जडजीवा विनिर्गताः।
सर्वतः पाणिपादान्तात्सर्वतोक्षिशिरोमुखात् ॥३१॥
निरिन्द्रियात्स्वरूपेण तादृशादिति निश्चयः ।
सादंशेन जडाः पूर्वं चिदंशेनेतरे अपि ॥
अन्यधर्मतिरोभावा मूलेच्छातोस्वतन्त्रिणः ॥३२॥ इति ।

ब्रह्मवादेअंशपक्ष एव ।

नन्वंशत्वे सजातीयत्सवमायाति । श्रुत्यन्तरे पुनः-ब्रह्मदाशा ब्रह्मेमे कितवा उत । (आथर्वणिकब्रह्मसूक्ते) अत्र सर्वस्यापि ब्रह्मविज्ञानेन विज्ञान प्रतिज्ञानाद् दाशादीनामपि ब्रह्मत्वं प्रतीयते । तत्कार्यत्व एव स्यादिति चेन्न । अन्यथा प्रकारान्तरेणाप्येके शाखिनो दाशकितवादित्वमधीयते शरीरत्वेनांशत्वेन च । स्वरूपतः कार्याभावेपि प्रकारभेदेन कार्यत्वात् । तथा च न साजात्यम् । आनन्दांशस्य तिरोहितत्वात् । धर्मान्तरेण तु साजात्यमिष्टमेव ॥२।३।४३॥

**मन्त्रवर्णात् ॥ २।३।४४॥**

पुरुष एवेदँ सर्वम् (ऋ.सं.१०/९०/२) इत्युक्त्वा-पादोस्य विश्वा भूतानि (ऋ.सं.१०/९०/३) इति भूतानां जीवानां पादत्वं पादेषु स्थितत्वेन वांशत्वमिति ॥ २।३।४४॥

## अपि स्मर्यते ॥२।३।४५॥

वेदे स्वतन्त्रतयोपपाद्य वेदान्तरेपि तस्यार्थस्यानुस्मरणम् । ममैवांशो जीवलोके जीवभूत: सनातन: (भ.गी.१५/७) इति ॥ २।३।४५॥

## प्रकाशादिवन्नैवं पर: ॥२।३।४६॥

जीवस्यांशत्वे हस्तादिवत् तद्दु:खेन परस्यापि दु:खित्वं स्यादिति चेन्न । एवं परो न भवति । एवमिति प्रकारभेद: । द्विष्टत्वेनानुभव इति यावत् । अन्यथा सर्वरूपत्वात्कुत एवं तत्राह । प्रकाशादिवत् । नाग्नेर्हि तापो न हिमस्य तत्स्यात् (भा.११।२३।५६) इति । प्रकाशग्रहणं धर्मत्वद्योतनाथ । दु:खादयोपि ब्रह्मधर्मा इति । अतो द्वैतबुद्ध्यांशस्यैव दु:खित्वं न परस्य । अथवा प्रकाश: प्राकाश्यदोषेण यथा न दुष्ट:। पापस्यापि तंदशत्वादिति ॥ २।३।४६॥

## स्मरन्ति च ॥२।३।४७॥

स्मरन्ति च सर्वेप्यृषयोंशिनो दु:खासंबन्धमंशस्य दु:खसंबन्धं स्मरन्ति । तत्र य: परमात्मा हि स नित्यो निर्गुण: स्मृत: । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा इति । कर्मात्मा त्वपरो योसौ मोक्षबन्धै: स युज्यते । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदु:खेन बाह्य: (क.२।५।११) चकारात् - तयोरन्य: पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति (श्वे.४।६।) इति ॥ २।३।४७॥

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ २।३।४८॥

ननु जीवस्य भगवदंशत्वे विधिविषयत्वाभावात्कर्मसंबन्धाभावेन कथं फलसंबन्ध: । जीवस्य च पुनरनेकदेहसंबन्धात् क: शूद्र: का भार्येति ज्ञानमप्यशक्यम् । अत: कर्ममार्गस्य व्याकुलत्वात् कथं जीवस्यापि दु:खित्वमित्याशङ्क्य परिहरति । अनुज्ञापरिहारौ विधिनिषेधौ जीवस्य देहसंबन्धाद्यो देहो यदा गृहीतस्तत्कृतौ । यथा शवाग्निश्चाण्डालभाण्डस्थमुदकं तद्धटादिश्च परिन्हियते । एवमुत्कृष्टं परिगृह्यते तथा जीवेपि देहसंबन्धकृत: । संबन्धश्चाध्यासिको भगवत्कृतश्च । आध्यासिको हि ज्ञानान्निवर्तते। द्वितीयो भगवतैव । जीवन्मुक्तानामपि व्यवहारदर्शनात् । श्रुतिस्तु भगवत्कृतसंबन्धमेवाश्रित्याग्निहोत्रादिकं विधत्ते । अन्यथा विद्यां स्वाज्ञानं च बोधयन्ती कर्माणि न विदध्यात् । शब्दज्ञानस्य पूर्वमेव सिद्धत्वात् । कथं सिद्धवद्याज्जीवं विदध्यात् । न्यासोपि देहसंबन्ध एव ॥ २।३।४८॥

असंततेश्चाव्यतिकर: ॥ २ ।३ ।४९ ॥

ननु देहस्यापि बाल्यकौमारादिभेदात्कथं कर्मकाले ब्राह्मणत्वादि । जीवैक्यादितिचेद् देहान्तरेपि स्यादिति तत्राह देहान्तरे संततिरपि नास्ति । बाल्यादिभेदे पुन: संततिरेका । अत: संततिभेदान्न कर्मणां सांकर्यमिति ॥२ ।३ ।४९ ॥

आभास एव च ॥२ ।३ ।५० ॥

ननु सच्चिदानन्दस्य ब्रह्मणोंश: सच्चिदानन्द एव भवेदत: कथं प्रवाहे प्रवेशो भगवतश्च सर्वकार्याणि तत्राह । आभास एव जीव: । आनन्दांशस्य तिरोहितत्वात् । चकारादाकारस्याप्यभाव: । न तु सर्वथा प्रतिबिम्बवन्मिथ्यात्वं जलचन्द्रवदित्येकस्यानेकत्वे दृष्टान्त: । तथा सत्यध्यासश्च स्वस्य न स्यात् । तत्र वृत्त्यादिदोषप्रसंगश्च । अतो न मिथ्यात्वरूप आभासोत्र विवक्षित: ॥२ ।३ ।५० ॥

अदृष्टनियमात् ॥२ ।३ ।५१ ॥

ईशित्वाय नैयायिकाद्यैरभिमतं जीवरूपं निराकरोति । नानात्मानो व्यवस्थात इति भोगव्यवस्थया जीवनानात्वमङ्गीकृतम् । तत्रादृष्टस्य नियामकत्वं तन्मते सिद्धम् देशान्तरवस्तूत्पच्यन्यथानपुपत्त्या व्यापकत्वं चाङ्गीकृतम् । एवं च क्रियमाणे मूल एव कुठार: स्यात् । सर्वेषामेव जीवानामेकशरीरसंबन्धात् कस्यादृष्टं तद्भवेत्। न च मिथ्याज्ञानेन व्यवस्था । तत्रापि तथा । न चानुपपत्त्या परिकल्पनम् । श्रुत्यैवोपपत्ते: । एतेन विरोधादृषिप्रामाण्यमपि निराकृतम् ॥ २ ।३ ।५१ ॥

अभिसंध्यादिष्वपि चैवम् ॥२ ।३ ।५२ ॥

ननु मन:प्रभृतीनां नियामकत्वात्तेषामीश्वरेच्छया नियतत्वान्न दोष इति चेन्न । पूर्ववदेव दोषप्रसक्ति: । तादृशेश्वरकल्पना च पूर्वमेव निराकृता ॥२ ।३ ।५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ २ ।३ ।५३ ॥

आत्मनो विभुत्वेपि प्रदेशभेदेन व्यवस्था । आत्मनि तादृश: प्रदेशविशेषोस्ति येन सर्वमुपपद्यत इति चेन्न । अन्यस्यापि प्रदेशस्तत्रान्तर्भवति । तस्यैव वा देशस्य देशान्तरगमने पूर्वदिशस्य त्यक्तत्वात्सोंशोंतर्भवेत् तिरोभवेदिति ॥ २ ।३ ।५३ ॥१६ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये द्वितीयाध्यास्य तृतीय: पाद: ॥२ ।३ ॥

# द्वितीयाध्याय का तृतीय पाद प्रारम्भ

## न वियद् अधिकरण

## न वियदश्रुतेः। २/३/१।

आकाश उत्पन्न होता नहीं कारण कि इसका श्रवण नहीं है (पूर्व पक्ष सूत्र।) श्रुतियों में परस्पर विरोध होने से श्रुति का प्रामाण्य जो प्रतिषेध करने में आवे तो उसका परिहार करने के लिये श्रुति वाक्यों में जो परस्पर विरोध मालुम हो उसका इस तृतीय पाद में परिहार करने में आया है कारण कि ब्रह्म का सर्वभवन सामर्थ्य और श्रुतियों का परस्पर अविरोध यह दो हेतुओं से श्रुतियों का परस्पर विरोध दूर करने के लिये उत्तर मीमांसा की प्रवृत्ति है। इसी प्रकार ब्रह्म की शक्ति तथा श्रुतियों का परस्पर अविरोध इन दो हेतुओं के आधार पर - सर्व ब्रह्म है इस प्रकार के ब्रह्मवाद में जड़ और जीव इन दोनों के संबंध में विरुद्ध अंश मालूम पड़े उसको दूर करने के लिये इस तृतीय पाद का आरम्भ किया है। प्रथम अध्याय के प्रथम पाद में केवल ब्रह्म का स्वरूप और इसके धर्मों के सम्बन्ध में विरोध मालुम पड़े उसे दूर किया गया है। अब इस द्वितीय अध्याय के तीसरे पाद में जड़ और जीव इन दोनों के विषय में दिखता विरोध दूर किया है उससे पुनरुक्ति दोष प्राप्त नहीं होता है। उपनिषद् में दो प्रकार की सृष्टि का वर्णन किया है। भूत और भौतिक ये सब साक्षात् ब्रह्म में से ही उत्पन्न है। अग्नि में से जैसे चिंगारियाँ निकलती है। उस प्रकार उत्पन्न होता है। यह एक प्रकार की सृष्टि है और ब्रह्म में से आकाश आकाश में से वायु इस प्रमाण से क्रमशः सब उत्पन्न होता है। यह दूसरी प्रकार की सृष्टि है। नाम और रूप बिना के ब्रह्म का नाम तथा रूप सहित तो प्राकट्य है उसका नाम सृष्टि है। यह

सृष्टि जड़ से ही होता है कारण कि यह जड़ ब्रह्म का कार्य है। जीव तो ब्रह्म का अंश है उसी से ही इसका नाम तथा रूप का सम्बन्ध नहीं होता है।

घट, पट आदि अनित्य जड़ पदार्थ के सम्बन्ध में उत्पत्ति रूप सृष्टि होती है। नित्य और परिच्छिन्न अणु-जीव के सम्बन्ध में शरीर से सम्बन्ध रूपी सृष्टि होती है और नित्य और परिच्छिन्न अणु जीव के विषय में शरीर से सम्बन्ध रूपी सृष्टि होती है और नित्य अपरिच्छिन्न व्यापक-ब्रह्म के विषय में प्राकट्य-अभिव्यक्ति-रूपी सृष्टि होती है इस प्रमाण से सृष्टि तीन प्रकार की है। भा. 2, 6, सुबोधिनी कारिका ?

युगपत्सृष्टि और क्रमसृष्टि ये दो प्रकार की सृष्टि में क्रमसृष्टि के विषय में संदेह होता है। छान्दोग्य उपनिषद् में वस्तुतः हे सोम्य! सर्वप्रथम सत् ही था एक तथा अद्वितीय छा. 6, 1, 1 इस प्रमाण से आरम्भ करके उस सत् का विचार किया, उससे तेज उत्पन्न किया। छा. 6, 2, 3 इस प्रमाण से तेज, लय तथा अन्न इन तीन की सृष्टि का वर्णन किया गया है। परन्तु वायु तथा आकाश की सृष्टि का वर्णन नहीं किया है। जिस प्रकार तैतिरीय उपनिषद् में ब्रह्म को जानने वाले पर को प्राप्त करते है। तै. 2, 1 इस प्रमाण से आरम्भ करके उस आत्मा में से ही वस्तुतः आकाश उत्पन्न हुआ। तै. 2, 1 इस प्रमाण से आकाश वायु आदि की उत्पत्ति का वर्णन किया है। इन दोनों छांदोग्य और तैतिरीय उपनिषद् के वर्णन क्रम सृष्टि सम्बन्धी है इसलिये इन वर्णों की एक वाक्यता होने से देखने योग्य है। छान्दोग्य उपनिषद् में तेज सृष्टि क्रिया का कर्म होने से असृजत् इस प्रमाण से सृष्टि वाचक पद होने से और तदैक्षत इस प्रमाण से विचारपूर्वक सृष्टि की हुई है। तेज आदि की सृष्टि मुख्य

है तथा तैतिरीय उपनिषद् में आत्मा और आकाश आदि का कर्ता है इस प्रकार कहा गया होने से और सृष्टि वाचक पद तथा विचारपूर्वक सृष्टि नहीं होने से आकाश आदि सृष्टि गौण है। एक वर्णन मुख्य तथा दूसरा गौण है इस प्रकार कहने से उप-उपनिषदों के वर्णन की एक वाक्यता नहीं हो सकती है। इस तरह जिसको शंका हो तो भाष्यकार कहते हैं कि मुख्य सृष्टि की उस परमात्मा ने इच्छाकी तै. 2, 6, इस प्रमाण से तैतिरीय उपनिषद् में आगे कहा जायेगा। इसलिये दोनों उपनिषदों में वर्णन की एक वाक्यता सिद्ध होती है।

संशय - इसमें संशय होता है कि आकाश उत्पन्न होता है कि नहीं। इसमें क्या अभिप्राय है ? पूर्व पक्षी-आकाश उत्पन्न होता नहीं क्यों ? कारण कि श्रुति में आकाश की उत्पत्ति का श्रवण नहीं है। श्रुति को प्रमाण स्वरूप स्वीकार करने वाले लोक श्रुति द्वारा ही निर्णय करना चाहते हैं और श्रुति को छान्दोग्य स्वरूप उपनिषद् में आयी मुख्य क्रम सृष्टि में आकाश का श्रवण नहीं होता है।

## अस्ति तु ।२/३/२।

परन्तु तैतिरीय उपनिषद् में आकाश की उत्पत्ति है। (सिद्धान्त सूत्र) सूत्र में तु शब्द पूर्व पक्ष का निराकरण करता है। तैतिरीय उपनिषद् में आकाश की उत्पत्ति है। जो कि छान्दोग्य उपनिषद् में आये मुख्य क्रम सृष्टि के वर्णन में आकाश की उत्पत्ति का वर्णन नहीं है फिर भी आकाश की उत्पत्ति स्वीकार करने से छान्दोग्य उपनिषद् के मुख्य क्रम सृष्टि के वाक्य में विरोध नहीं आने से एक स्थान पर तैतिरीय उपनिषद् में- आकाश की उत्पत्ति कही हुई होने से दो वर्णों की एक वाक्यता सिद्ध करने के लिये दूसरे स्थान पर - छान्दोग्य उपनिषद् में भी आकाश

की उत्पत्ति स्वीकार करनी चाहिये और भी एक विज्ञान से सभी का विज्ञान होता है। छा. 6, 1, 3 इस प्रतिज्ञा के कारण भी छान्दोग्य उपनिषद् में और तैतिरीय उपनिषद् के वाक्यों की एक वाक्यता स्वीकार करनी चाहिये। अर्थात् तैतिरीय के सृष्टि वाक्य को सृष्टि के लिये इक्षा-विचार की आवश्यता है जबकि आकाश आदि छान्दोग्य के सृष्टि वाक्य को सृष्टि के लिये आकाश आदि की आवश्यकता है। इस प्रकार दोनों वर्णों की एक दूसरे की आकांक्षा रखने वाले होने से एक वाक्यता स्वाभाविक रीति से सिद्ध होती है।

## गौण्यसम्भवात्। २/३/३।

तैतिरीय उपनिषद् में वर्णन की गयी आकाश की उत्पत्ति गौण अर्थ में है कारण कि जो निरवयव आकाश की उत्पत्ति संभव नहीं है पूर्वपक्ष सूत्र तैतिरीय उपनिषद् में वर्णन की हुई आकाश की उत्पत्ति गौणी-गौण, लाक्षणिक अर्थ में है क्यों? कारण कि आकाश की उत्पत्ति असम्भव है। वस्तुतः आकाश की उत्पत्ति संभव नहीं है कारण कि आकाश निरवयव और व्यापक है तथा छान्दोग्य उपनिषद् में आये मुख्य क्रम सृष्टि का वर्णन में आकाश की उत्पत्ति नहीं कही गयी है। ब्रह्म आकाश का अधिष्ठान होने से अथवा-आकाश जीव की तरह ब्रह्म का अंश होनेसे अथवा आकाश भी पृथ्वी आदि की तरह ब्रह्म का शरीर होने से आकाश ब्रह्म का विशेषण बनता है और विशेषण का जहां तक ज्ञान नहीं हो वहाँ तक विशिष्ट पदार्थ का ज्ञान नहीं होता है इस न्याय से आकाश एक विज्ञान की श्रेणी में आयेगा। और उससे एक विज्ञान से सभी का विज्ञान होगा। यह प्रतिज्ञा घट सकती है तथा लोक में भी अवकाश करो इत्यादि वाक्यों में गौण प्रयोग दिखाई पड़ता है उससे तैतिरीय

उपनिषद् में आकाश के विषय में संभूतः उत्पन्न हुआ इस प्रकार जो कहा गया है वह व्यापक आकाश भी ब्रह्म में से उत्पन्न होता है। इस प्रकार ब्रह्म की प्रशंसा करने के लिये गौण अर्थ में है यह प्रमाण जानना चाहिये।

### शब्दाच्च।२/३/४।

और आकाश की नित्यता दिखाने वाला शब्द है उससे आकाश की उत्पत्ति गौण है। पूर्व पक्ष सूत्र वायु तथा आकाश यह अमृत-नित्य है। बृ. 2, 3, 3। आकाश की भाँति परमात्मा व्यापक है और नित्य है इस प्रमाण से आकाश का नित्यत्व दिखाने वाला शब्द है। वस्तुतः अमृत और ब्रह्म के दृष्टान्त भूत आकाश की उत्पत्ति सम्भव नहीं है।

### स्याच्चैकस्य ब्रह्मशब्दवत्।४/३/५।

ब्रह्म शब्द की तरह एक संभूत शब्द का मुख्य और गौण ये दो प्रकार के अर्थ हो सकते है। पूर्व पक्ष सूत्र - शंका-अरे! आकाश की उत्पत्ति गौण अर्थ में किस रीति से हो सकती है ? तैतिरीय उपनिषद् में आयी क्रमसृष्टि के वर्णन में 'संभूतम्' उत्पन्न हुआ यह एक ही पद आगे ऊपर भी, वायु आदि में भी चालु है और ऐसा होने से वायु आदि आगे वर्णन किये हुए पदार्थों के सम्बन्ध में समभूत् यह पद मुख्य अर्थ में उपयोग किया है और आकाश के विषय में गौण अर्थ में सर्वथा उपयोग किया है। इस तरह एक ही समय एक ही पद में अभिधा और लक्षणा में दो वृत्तियों का विरोध प्राप्त होता है।

पूर्व पक्षी का उत्तर-इस प्रमाण से कहते हो, तो नहीं कारण कि एक ही शब्द

का किसी ही स्थल पर गौण अर्थ होता है जिस प्रकार तप द्वारा ब्रह्म को विशेष जानने की इच्छा कर तप ब्रह्म है तै. 3, 2 इस वाक्य में ब्रह्म शब्द का दो अर्थ में प्रयोग हुआ है। इस कारण यही प्रथम वाक्य में मुख्य-अभिधा वृत्ति है तथा दूसरे वाक्य में गौणी लक्षणा-वृत्ति है इस वाक्य में तो ब्रह्म शब्द दो बार आया है। इसलिये दो स्थल दो अलग अर्थ स्वीकार करने में बाधा नहीं है। किन्तु सृष्टि वाक्य में संभूत शब्द का एक ही बार उपयोग किया है इसलिये इसके दो अर्थ एक ही समय में सम्भव नहीं है। इस प्रमाण से तर्क नहीं देना कारण कि सृष्टि वाक्य में संभूत शब्द की भी प्रत्येक स्थान पर आवृत्ति करने में आती है और संभूत शब्द की यह आवृत्ति कहीं पूर्व के गौण अर्थ में ही होती है ऐसा नहीं है। अर्थात् संभूत शब्द आकाश के संबंध में गौण अर्थ में उपयोग किया है और वायु, तेज आदि संभूत शब्द के अर्थ में आवृत्ति होती है। इसलिये एक ही समय पर एक ही शब्द के दो विरुद्ध अर्थ प्राप्त होने पर दोष नहीं रहता है।

वेदान्त के सत्कार्यवाद के सिद्धान्त प्रमाण से जगत की उत्पत्ति पहले जगत परमात्मा रूपी ही रहता है। इस प्रमाण से सृष्टि की उत्पत्ति के पहले आकाश भी परमात्मा रूप ही रहा होगा। पर आत्मा से भिन्न नहीं रहता है और सृष्टि जब उत्पन्न करने में आती है जगत रूपी दूसरे कार्य की तरह आकाश भी परमात्मा से भिन्न रहता है इस प्रमाण से कार्य जगत तथा आकाश से दोनों में सृष्टि की दशा में परमात्मा से पृथक् रहने का एक ही साधारण धर्म रहता है और उससे ही आकाश के संबंध में संभूत पद वाला वाक्य 'देवदत्तसिंह है' इस वाक्य की भाँति गौण अर्थ में उपयोग है। इस भाव से भाष्यकार कहते हैं कि परमात्मा से पृथक् अस्तित्व नहीं

है। इस कारण सृष्टि उत्पन्न होते समय परमात्मा से पृथक् रहने का आकाश का ही गुण धर्म है। उसके लिए ही संभूतपद कार्य का जैसा आकाश के सम्बन्ध में गौण अर्थ का उपयोग है। उससे ही आकाश के सम्बन्ध में संभूत पद का गौण अर्थ स्वीकार किया है। आकाश वायु आदि रूप धारण करने वाला ब्रह्म ही सर्वत्र कारण है जिससे आकाश, वायु, अनेक पदार्थों की कारणता लक्षणभूत नहीं है। अर्थात् आकाश वायु आदि अनेक पदार्थों का स्वरूप कारणता रूप नहीं है। वास्तव में ब्रह्म ही सभी का कारण है। इसलिये ब्रह्म की प्रशंसा के लिए आकाश के सम्बन्ध में संभूत पद का गौण अर्थ लेने में किसी तरह हानि नहीं है। 'आकाश' शब्द का अर्थ आकाश रूप धारण करने वाला ब्रह्म इस प्रमाण से करने में आता है और 'घड़े में जल लाओ' इस प्रकार कहने में बिना छिद्र वाले घड़े का ज्ञान सहज रीति से होता है। इसलिए यह अर्थ स्वाभाविक रीति से प्राप्त होने से आकाश रूप धारण करने वाला इस प्रकार ब्रह्म के विशेषण से आकाश की व्यावृत्ति के लिये भी लक्षणा की आवश्यकता नहीं है। कारण कि स्वभाव से भी ब्रह्म स्वरूप है जिससे आकाश की उत्पत्ति का वर्णन करने वाली श्रुति गौण अर्थ में है यह सिद्ध होता है। इस प्रमाण से पूर्व पक्ष प्राप्त होने से सूत्रकार यह सूत्र कहते हैं।

**प्रतिज्ञाहानिख्यतिरेकाच्छब्देभ्यः। २/३/६।**

(आकाश परमात्मा का कार्य रूप है।) बाहर आता है इस तरह जो स्वीकार करने में नहीं आवे तो श्रुति के शब्दों से सिद्ध हुई। (एक के विज्ञान से सभी का विज्ञान होता है।) इस प्रतिज्ञा में बाध आता है। सिद्धान्त सूत्र जो छान्दोग्य श्रुति का विरोध नहीं आता हो, तो आकाश की उत्पत्ति नहीं होती इस प्रकार जो तुम पूर्व

पक्षी कहते हो तो स्वीकार है। छान्दोग्य श्रुति का विरोध किस भाँति आता है ? एक के विज्ञान से सभी का विज्ञान होता है इस प्रकार छान्दोग्य उपनिषद् ने 6, 1, 3 जो प्रतिज्ञा की है उसका बाध होता है कारण कि पूर्व पक्षी आकाश का व्यतिरेक-कार्यरुप बाहर आने को स्वीकार नहीं करते हैं जो आकाश ब्रह्म में से कार्य की भाँति बाहर नहीं निकलता, ब्रह्म के संग ही जुड़ा रहे तो ब्रह्म के विज्ञान का विषय आकाश की भाँति होता है कारण कि ब्रह्म एवं आकाश ये दोनों व्यापक है और एक दूसरे के साथ ये जुड़े हुए है और जो इस तरह हो तो यह केवल ब्रह्म रूपी एक ही पदार्थ का विज्ञान नहीं कह सकते हैं कारण कि यह विज्ञान का विषय है। ब्रह्म तथा इसके साथ जुड़ा हुआ आकाश होता है। इसीलिये छान्दोग्य श्रुति एक ही पदार्थ के विज्ञान की बात करती है।

आकाश लौकिक होने से पदार्थ (अर्थात् लोक में आकाश के सम्बन्ध में व्यवहार होने से तथा मीमांसक लोक आकाश लौकिक प्रत्यक्ष का विषय है। इस प्रकार मान्यता होने से) सर्व लौकिक पदार्थ का ज्ञान मिलने से आकाश के ज्ञान की भी आवश्यकता रहती है। ब्रह्म के ज्ञान से जिस तरह ब्रह्म का अंश रूपी जीव का ज्ञान होता है इस भाँति आकाश का भी ज्ञान होगा। इस प्रकार नहीं मानना कारण कि आकाश लौकिक लोक में होने से व्यवहार का विषय है। जो केवल जीव लौकिक-लोक व्यवहार का विषय नहीं है। आकाश जगत के सारे व्यवहार का विषय बनता है इसलिये यह आकाश अतीन्द्रिय है, अलौकिक है आदि विचार नहीं करना।

शंका-आकाश ब्रह्म में से कार्य रूप बाहर नहीं आता है परन्तु ब्रह्म और

आकाश ये दोनों एक-दूसरे के साथ जुड़े होने से यह इन दोनों की एकता है और इस एकता की सामर्थ्य से आकाश का ज्ञान मिल सकता है और जब इस प्रमाण से आकाश का ज्ञान मिल सकता है तब एक के विज्ञान से सभी का विज्ञान होता है। इस प्रतिज्ञा का बाध किस भाँति प्राप्त होगा?

उत्तर-इस प्रमाण से शंका होने से सूत्रकार उत्तर देते हैं कि 'शब्देभ्यः' शब्दों से 'जो उपदेश द्वारा नहीं सुना वह सुनायी पड़ जायेगा। मनन नहीं किया गया उसका मनन हो जायेगा जो मालुम नहीं है वह मालुम हो जायेगा छा, 6, 1, 3 इस शब्द से श्रुति के वाक्य से आगे और ऊपर आये एक मिट्टी के पिण्ड मिट्टी के बने सर्व पदार्थों का ज्ञान होता है इत्यादि शब्दों से श्रुति कार्यकारण भाव से ही (वस्तु के सामर्थ्य से नहीं) ज्ञान का बोध होता है। शब्द रूपी हेतु से सिद्ध हुआ एक विज्ञान से सभी विज्ञान होता है इस प्रतिज्ञा की हानि होती है। इस प्रकार सूत्र की योजना है।

### पावद्विकारं तु विभागोलोकवत्। २/३/७।

किन्तु लोक में होता है उस रीति से, ये सभी विकार है इन सभी की उत्पत्ति होती है सूत्र में आये तु शब्द से आकाश की उत्पत्ति सम्भव नहीं है। इस प्रकार की शंका को दूर करते है। जो-जो विकृत है उन सभी विभागों की उत्पत्ति होती है। आकाश भी विकृत है कारण कि यह लौकिक व्यवहार का विषय है। इस प्रकार लोक में सभी विकृत पदार्थ उत्पन्न होते हैं उसी भाँति आकाश भी विकृत होने से उत्पन्न होता है।

आकाश की उत्पत्ति स्वीकार करने से आकाश का नित्यत्व बताने वाली श्रुतियों से विरोध प्रारम्भ होता है उसको भाष्यकार अब दूर करते हैं। छान्दोग्य की श्रुति से आकाश की उत्पत्ति सिद्ध होने से आकाश की तरह परमात्मा व्यापक और नित्य है। "आकाश ब्रह्म का शरीर है" तै. 1, 6, 2, जिस प्रकार यह आकाश प्रसिद्ध तथा अनन्त है उसी भाँति आत्मा को भी अनन्त जानना चाहिये ।'आकाश आत्मा है' तै. 1, 7, 1 इत्यादि श्रुतियों का परमात्मा इन सभी के समान है। बृ. 1, 3, 22 'जो परमात्मा आकाश में रहकर बृ. 3, 7, 12 सभी आत्मा है। बृ. 4, 5, 7, इस प्रकार की दूसरी श्रुतियों के साथ एक वाक्यता सिद्ध होती है। आकाश की नित्यता बताने वाली श्रुतियों का तात्पर्य दिखाते हुए भाष्यकार कहते हैं कि व्यवहार में अज्ञानी पुरुषों को बोध कराने के लिए आकाश की नित्यता दिखाने वाले वाक्यों का उपयोग है।

## एतेन मातरिश्वा अधिकरण

## एतेन मातरिश्वा व्याख्यातः। २/३/८।

इससे आकाश की उत्पत्ति सिद्ध करने से वायु का निर्णय हो गया। आकाश की उत्पत्ति सिद्ध करने से वायु की भी उत्पत्ति सिद्ध हो गयी है जो वायु है वह अस्त नहीं होने से देवता है बृ. 1, 5, 22 इस श्रुति में से अलौकिकता बताने वाला जो 'देवता' पद है वह भौतिक वायु की व्यावृत्ति करने के लिये है।

## असंभवाधि करण

## असंभवस्तु सतोऽनुपपत्तेः। २/३/९।

परन्तु सद्रूप ब्रह्म की उत्पत्ति संभव नहीं है कारण कि यह घटती नहीं है। शंका-अरे! ब्रह्म की भी उत्पत्ति होती है कारण कि 'परमात्मा आकाश की तरह व्यापक और नित्य है। इस श्रुति के आधार से इस प्रकार आकाश का व्यापकत्व और नित्यत्व मात्र सापेक्ष है उसी भाँति ब्रह्म भी साक्षेप रीति से ही व्यापक और नित्य है। इसलिये ब्रह्म में वास्तविक व्यापकत्व और नित्यत्व का अभाव है।' उत्तर-इस प्रकार की शंका का सूत्र में आया तु शब्द परिहार करता हैं। सत् सत्मात्र /ब्रह्म की उत्पत्ति संभव नहीं है। कुण्डल की उत्पत्ति होने से सुवर्ण के नाम और रूप में किसी भी जाति का परिवर्तन नहीं होता है।

ब्रह्म की उत्पत्ति जो स्वीकार करते हो तो यह घटती नहीं है प्रथम तो स्वयं से ब्रह्म की उत्पत्ति सम्भव नहीं है कारण कि इस प्रमाण के मानने से आत्माश्रय दोष प्राप्त होता है और जो दूसरे पदार्थ में से ब्रह्म की उत्पति होती है इस तरह स्वीकार करने में आये तो यह दूसरे पदार्थ की उत्पत्ति एक तीसरे पदार्थ में से होगी। इस प्रकार मानना पड़ेगा और इस भाँति मानने से अनवस्था दोष प्राप्त होगा। वास्तविक रीति से तो जो मूल पदार्थ है वही ब्रह्म है यह सिद्धान्त है।

## तेजोऽत इत्यधिकरण

## तेजोतस्तथा ह्याह। २/३/१०।

इससे वायु में से तेज उत्पन्न होता है कारण कि इस प्रमाण से वस्तुतः श्रुति कहती है। तेज वस्तुतः वायु में से उत्पन्न होता है। कारण कि इस प्रमाण से श्रुति कहती है कारण कि वायु में से अग्नि, तेज उत्पन्न होता है। इस प्रमाण से श्रुति है। सूत्र में आये हि शब्द से सूत्रकार इस प्रमाण से कहते हैं। एक के विज्ञान से सभी

का विज्ञान होता है। इस प्रतिज्ञा की हानि को दूर करने के लिये वायु और आकाश की उत्पत्ति सिद्ध करने के लिये छान्दोग्य श्रुति तैतिरीय श्रुति की अपेक्षा रहती है। उससे छान्दोग्य के आधार रूप बनी तैतिरीय श्रुति मुख्य होने से वायु रूप धारण किये सत् ब्रह्म ही तेज को उत्पन्न करता है इस तरह सूत्रकार कहते हैं। ब्रह्म में से ही सभी पदार्थ उत्पन्न होते हैं यह पक्ष तो अविरुद्ध है।

## आप अधिकरण।

## आपः २/३/११।

जल तेज में से उत्पन्न होता है कारण कि इस प्रमाण से श्रुति कहती है। पूर्व सूत्र में से तथा ह–इस प्रकार से वस्तुतः श्रुति कहती है–इतना ही भाग इस सूत्र से लेने का है अर्थात् पूर्व सूत्र में आये अतः पदकी अनुवृत्ति इस सूत्र में नहीं है। सभी स्थान पर श्रुति का विरोध नहीं है। इस प्रकार से अविरोध बताने के लिये यह एक अनुवाद सूत्र है।

## पृथ्वी-अधिकार अधिकरण

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः।२/३/१२।

श्रुति में आये 'अन्न' शब्द से पृथ्वी समझना है कारण कि अधिकारप्रकरण रूप और अन्य शब्द है। उस जल ने विचार किया कि हमें बहुत हो कर उत्पन्न होना है उसने अन्न उत्पन्न किया। छा. 6, 2, 4। इस श्रुति में 'अन्न शब्द का अर्थ ब्रीहि आदि धान्य है कि पृथ्वी है, इस प्रमाण में संदेह होता है। शंका, अरे! संदेह किस रीति से संभव है? कारण कि पहले बृ. सू. 2, 3, 10 में बताया। उस प्रमाण से

उपजीव छान्दोग्य श्रुति का आधार बनी तैतिरीय श्रुति अधिक बलवान है।'

समाधान - इस प्रमाण से शंका हो, तो इसका समाधान इस प्रमाण से है। पानी में से पृथ्वी, पृथ्वी में से औषधियें और औषधियों में से अन्न तै. 2, 1 इस प्रमाण से अगली श्रुति है, इस प्रमाण के होने से संदेह होता है कि जल पृथ्वी और औषधियों को उत्पन्न करके अन्न को उत्पन्न करता है।' 'अन्न' शब्द से ही पृथ्वी का ग्रहण करना अर्थात् जल में से अन्न की उत्पत्ति व्यवधान से पृथ्वी आदि की उत्पत्ति के पीछे है, या पीछे लक्षणा से 'अन्न' शब्द का अर्थ पृथ्वी करना इस प्रमाण में संदेह पैदा होता है।

**शंका** - अरे! पृथ्वी और औषधियों की उत्पत्ति के पीछे अन्न की जल में से उत्पत्ति होती है ऐसा होने दो (और लक्षणा को स्वीकार नहीं करो।)

**समाधान** - इस प्रमाण से जो कहने में आता है तो इसके उत्तर में हमको कहना चाहिये नहीं, छान्दोग्य श्रुति को अन्न की अपेक्षा नहीं है। छान्दोग्य श्रुति में 6, 2, 3 आरम्भ में ब्रह्म जगत का कारण है इस बात का समर्थन करने के लिये तेज और जल इन दो महाभूतों की उत्पत्ति का वर्णन है और उससे छान्दोग्य श्रुति में केवल महाभूतों की ही विवक्षा है और अकेले अन्न पद की पृथ्वी के अर्थ में लक्षणा स्वीकार क़रने में महाभूतों के प्रकरण का त्याग पृथ्वी तथा औषधि - इन दो अधिक पदार्थों को स्वीकार और इन पदार्थों का क्रम ये तीन वाक्यों का दोष स्वीकार करके 'अन्न' पद का व्रीहि आदि योगरूढ़ अर्थ स्वीकार करने में गौरव दोष है। इन तीन कारणों से पहले बताये 'अन्न' पद के सम्बन्ध में संशय होता है।

**पूर्वपक्ष**–इसमें हे सोम्य! मन वस्तुतः अन्नमय है, प्राण जलमय है और वाणी तेजोमय है छा. 6.5.4 इस प्रमाण से तेज, जल और अन्न ये तीन सभी स्थान पर साथ-साथ ही दिखाई पड़ते हैं। अन्न शब्द पृथ्वी औषधि और अन्न ये तीनों अर्थ में लोक में प्रसिद्ध है और वर्षा से अन्न आदि अधिक होते हैं। छा. 6.2, 2 में इस प्रमाण से भी पृथ्वी औषधि और अन्न तीनों तुल्य है इसलिए जल रूप कारण से ये तीनों कार्य-पृथ्वी औषधि तथा अन्न का अभेद है ये बताने वाली इच्छा से पृथ्वी औषधि और अन्न ये तीन में से जो अच्छा लगे वह एक कहने का होने से श्रुति में अन्न कहा गया है।

सिद्धान्त –इस प्रमाण से पूर्व पक्ष प्राप्त होने पर सिद्धान्त कहा गया है। 'अन्न' शब्द का अर्थ पृथ्वी क्यों है? अधिकार रूप और दूसरा शब्द होनेसे अधिकार प्रकरण-महाभूतों का ही है। भौतिक पदार्थों का नहीं है। श्याम रूप छा. 6, 4, 1, 4 पृथ्वी का ही है कारण कि तेज और जल ये महाभूतों के साथ ही इस श्याम रूप का कथन है। 'जल में से पृथ्वी' तै. 2. 1 इस प्रमाण से अन्य श्रुति भी है उससे 'अन्न' शब्द से पृथ्वी का ही ग्रहण होता है। ब्रीहि आदि अन्न का नहीं।

## तदभिध्यानादेव अधिकरण

## तदभि ध्यानादेव तु तल्लिङ्गात्सः। २/३/१३

परन्तु वही परमात्मा ही (वायु आदि उत्पन्न करता है।) परमात्मा के संकल्प लेने के कारण परमात्मा से 'आकाश' आदि शब्दों का कथन है। परमात्मा का सर्वकर्तृत्व रूपी प्रमाण होने से परमात्मा का ही ग्रहण होता है और आकाश आदि

का ग्रहण नहीं होता है। आकाश रूपी कार्य में से ही वायु आदि की उत्पत्ति होती है। इस मत का सूत्र में आया तु शब्द निवारण करता है। यही आकाश का उत्पन्न करने वाला परमात्मा वायु आदि को उत्पन्न करता है। शंका - परमात्मा को 'आकाश' किस प्रकार कहा जाता है ?

उत्तर-इस प्रमाण से शंका हो तो सूत्रकार कहते हैं कि तदभिध्यानात्, उस परमात्मा के अभिध्यान संकल्प के लेने पर अलग-अलग कार्य उत्पन्न करने के लिये परमात्मा का संकल्प होता है और उससे परमात्मा उस उस रूप में होता है। इसलिए परमात्मा उन-उन नामों से जाना जाता है। **शंका**-अरे ! श्रुति में जिस प्रमाण से कहा गया है कि आकाश में से वायु उत्पन्न होती है। उसी प्रमाण से ही क्यों नहीं समझना ?

उत्तर-इस प्रकार शंका हो तो सूत्रकार कहते हैं कि 'तल्लिङ्गात्, उस परमात्मा का लिंग (चिन्ह) है इसलिए, सभी को उत्पन्न करने रूपी लिंग परमात्मा का ही है इस प्रकार उपनिषदों में सभी स्थान पर मालुम होता है। जड़ पदार्थ में से अथवा देवता में से ही जो कोई उत्पन्न होता है। वह सब ब्रह्म में से ही उत्पन्न होता है। यह सिद्ध हुआ।'

## विपर्ययेण अधिकरण

## विपर्ययेण तु क्रमोऽत उपपद्यते। २/३/१४।

किन्तु इससे प्रलय का क्रम, उत्पत्ति के क्रम से विपरीत (उल्टा) है कारण कि यह घटता है। इस प्रमाण से पदार्थों की उत्पत्ति होती है उस प्रमाण से इनका

प्रलय होता नहीं है परन्तु विपरीत क्रम से होता है कारण कि यह एक ब्रह्म में से पदार्थों की उत्पत्ति होने के पश्चात् इस ब्रह्म में ही इन पदार्थों का प्रलय होता है। इसलिये ये प्रलय का क्रम उत्पत्ति के क्रम से विपरीत है क्यों? कारण कि इस प्रमाण से घटता है तो क्रम से पदार्थों का प्रवेश करते हैं उससे विपरीत क्रम से यह बाहर आता है। यह नियम क्रम सृष्टि के सम्बन्ध में ही है।

## अन्तरा विज्ञानमनसी अधिकरण

### अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात्। २/३/१५।

ब्रह्म और महाभूतों के बीच में आये विज्ञान और मन विपरीत (उलटे) क्रम से उत्पन्न होने के कारण इन दोनों का प्रमाण है। इस प्रकार जो कहते हो तो नहीं, कारण कि (इन दोनों के नाम और रूप) इन दोनों का विशेष नहीं है।

तैतिरीय उपनिषद् में आकाश से आरम्भ करके अन्न तक की उत्पत्ति का 1-1 वर्णन करके अन्नमय आदि पांच का 21-5। निरुपण किया गया है। इसमें अन्नमयी औषधी और अन्न रूपी सामग्री तथा प्राणमयी वायु, आकाश और पृथ्वी रूपी सामग्री उत्पन्न हुई है। इस प्रकार पहले तै 2-1 3. में कहा गया है। आनन्दमय तो परमात्मा है और ये तो मूल कारण होने से नित्य है तथा उससे 'आत्मा' पद के द्वारा इसका निरुपण हो गया है। (अब ब्रह्म और महाभूतों की अथवा अन्नमय और प्राणमय तथा आनन्दमय के) बीच में रहने वाले विज्ञानमय तथा मनोमय किसी भी स्थान पर उत्पन्न होता है इस प्रकार कहना चाहिये।)

पूर्व पक्षी-इसमें जो दो-विज्ञान और मन क्रम से उत्पन्न होते हैं। इस प्रकार

कहना चाहिये विज्ञान और मन की उत्पत्ति का क्रम तो सूत्र में 'विज्ञान मनसी' इसमें जो क्रम है उससे विपरीत क्रम सूत्रकार को विवक्षित हैं। कारण कि ब्रह्म सूत्र में 'विपर्यय' सूत्र ब्र.सू. 2।3।14 पीछे यह सूत्र कहा गया है और इस सूत्र में अन्तरा यह प्रमाण कहा गया है अर्थात् तैत्तिरीय उपनिषद् में प्रथम मन की उत्पत्ति का वर्णन है और उससे सूत्रकार मनोविज्ञाने इस प्रकार कहना था परन्तु विज्ञानमय जीव मनोमय से श्रेष्ठ होने से और इसको छान्दोग्य उपनिषद में प्रथम विज्ञान मय जीव का तथा पीछे मन का वर्णन होने से सूत्रकार के मस्तिष्क में विज्ञानमय का विचार पहले आया और मन का विचार पीछे आया उन्होंने इस प्रमाण से विज्ञान मनसी इस क्रम में सूत्र रचा है।

तेज जल और अन्न में तीन का 'अन्नमय में समावेश होने से और वायु और आकाश का प्राण में ही समावेश होने, आकाश के पहले विज्ञानमय और मनोमय उत्पन्न हुए हैं इस प्रकार कहना चाहिये कारण कि छान्दोग्य में इन दोनों के आगे 'अनेन जीवेनात्मनानुप्रविष्य और षोडशानां कलानामेका कलातिशिष्टासीत् इस प्रमाण से जो वचन है वही प्रमाण है । अर्थात् विज्ञानमय तथा मनोमय का ग्रहण करने में यह वचन ही नियामक है। तैत्तिरीय में भी यह प्रमाण लिंग है। उससे इन दोनों की उत्पत्ति कहनी चाहिये।

**सिद्धान्त**-इस प्रमाण से जो कहने में आवे तो हमें नहीं कहना चाहिये। इन दोनों की उत्पत्ति नहीं होती है कारण कि इन दोनों का नाम और रूप में दोनों का विशेष नहीं है। नाम और रूप ये विशेषण वाले पदार्थों की उत्पत्ति में कही जाती है। किन्तु इन दोनों की विज्ञान मय तथा मनोमय की उत्पत्ति नहीं कही जाती है

कारण कि विज्ञानमय ये जीव है और मनोमय ये वेद है। जीव और वेद नित्य होने से इनकी उत्पत्ति नहीं होती है जिससे विज्ञानमय और मनोमय भूतों में तथा भौतिक पदार्थों में प्रवेश नहीं होने से इनकी उत्पत्ति नहीं, कहना चाहिये।

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।/२/३/१६**

परन्तु जीव को स्थावर और जंगम इन दो शरीर का समागम रूपी संबंध होता है। स्थावर और जंगम शरीर के जन्म और मरण रूपी धर्म जीव के सम्बन्ध में कहा गया है वह लाक्षणिक है कारण कि शरीर भाव से ही जीव को शरीराभिमानित्व होता है। **शंका**-अरे ! विज्ञान मय जीव की जो उत्पत्ति नहीं हो और मनोमय वेद की उत्पत्ति नहीं हो तो सभी व्यवहार का नाश हो जाय उत्पत्ति तो 'अनित्य जड़ पदार्थ के संबंध से उत्पत्ति रूप सृष्टि होती है। नित्य और परिच्छिन्न जीव के सम्बन्ध में शरीर के सम्बन्ध रूपी सृष्टि होती है। कारिका-28 अणुभाष्य ब्र.सू. 2,3, 1 इस प्रमाण से तीन प्रकार से निरुपण किया गया है। उससे जीव की शरीर के समागम रूपी उत्पत्ति भी नहीं होती है।'

**उत्तर**-इस प्रकार की शंका को सूत्र में आये हुए तु शब्द से दूर होती हैं। 'चराचरे' प्रथमा द्विवचन इसलिये स्थावर और जंगम शरीर, 'तयोः' सप्तमी द्विवचन है इसलिये ये दो स्थावर और जंगम शरीर से सम्बन्ध करके उपाश्रय-आश्रय, अर्थात् शरीर के साथ का सम्बन्ध, जीव को शरीर के सम्बन्ध से जो जन्म और मृत्यु है इस प्रकार श्रुति कहती है। इस कारण जीव का शरीर के साथ सम्बन्ध तो होता ही है परन्तु जीव की स्वयं स्वतन्त्र रूप से उत्पत्ति नहीं है। वेद भी नादरूप से सभी के शरीर में रहता है। इसलिये वेद का भी शरीर से सम्बन्ध होता है।

**शंका**- अरे! शरीर जब उत्पन्न होता है तब जीव भी उत्पन्न होता है। इस प्रमाण से जो नहीं मानोगे तो जात कर्म आदि संस्कार का अभाव प्राप्त होगा।

**उत्तर**- इस प्रकार शंका होने पर भाष्यकार कहते हैं कि नहीं। तद्व्यपदेशः जीव के सम्बन्ध में जन्म मरणरूपी धर्म का कथन अर्थात् इस शरीर को जन्म तथा मरण रूपी धर्म होने से जीव के सम्बन्ध में जो धर्म कहने में आया है वह भक्ति लाक्षणिक है। क्यों तद्भावभावित्वात् शरीर के भाव हेतु जीव को शरीराभिमानित्व होने के लिये अर्थात् शरीराभिमानरूप सम्बन्ध के लिये ही जीव सम्बन्ध जन्म मरण रूपी धर्म का जो कथन है वह लाक्षणिक है। शशीर के अन्वय और व्यतिरेक के लिये ही जीव को शरीर का अभिमान होता है। इसको नहीं होता है। अर्थात् शरीर हो तभी जीव को शरीर का अभिमान होता है। शरीर नहीं हो तो जीव को शरीर का अभिमान नहीं होता है। देह का जन्म-मरण रूपी धर्म जीव के सम्बन्ध में लाक्षणिक है। देह के सम्बन्ध के लिये ही जीव की उत्पत्ति का कथन इस प्रकार सिद्ध हुआ।

## नात्मा श्रुतेः अधिकरण

### नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः। २/३/१७।

आत्मा उत्पन्न नहीं होती है कारण कि आत्मा की उत्पत्ति का श्रुति में श्रवण नहीं है और श्रुतियों का आधार आत्मा नित्य है। शंका-अरे! जीव भी क्या उत्पन्न होता है। इसकी उत्पत्ति लाक्षणिक है इस प्रकार किसलिये कल्पना करते हो ? उत्तर - इस प्रकार की शंका होने पर सूत्रकार कहते है कि नहीं, आत्मा उत्पन्न नहीं

होती है। क्यों? अश्रुतेः श्रुति में इस तरह प्रमाण सुना नहीं है। आत्मा की उत्पत्ति वस्तुतः श्रुति में दिखायी नहीं पड़ती है। देवदत्त जन्म 'विष्णुदत्त जन्म' इन वाक्यों में देह की ही उत्पत्ति है। देह की उत्पत्ति के अतिरिक्त जीव भिन्न उत्पत्ति श्रुति में कहीं दिखायी नहीं पड़ती है। अग्नि की चिनगारी की तरह जीव ब्रह्म में से बाहर निकलता है इस तरह जो वर्णन है वह उत्पत्ति नहीं है कारण कि जीव का नाम और रूप से सम्बन्ध नहीं है इस जीव के गुण और स्वरूप का सम्बन्ध नहीं है। इस जीव के गुणों और स्वरूप के सम्बन्ध का अगले बृ. सू. 2,3,18 आदि में बताया जायेगा। तथा जीव की उत्पत्ति नहीं है कारण कि 'ताभ्यः' श्रुतियों के लिये-जीव नित्य है यह आत्मा अजर, अमर है बृ. 4, 4, 25 'आत्मा उत्पन्न होता नहीं, मरता नहीं' कठ 1,2,18 और इस प्रकार श्रुतियों के कारण जीव नित्य है।

## ज्ञोत एवेत्य अधिकरण

## ज्ञोऽत एव। २/३/१८।

इससे ही श्रुतियों के लिये जीव-चैतन्यस्वरूप-ज्ञान स्वरूप और ज्ञान धर्म वाला है। ज्ञः यह चैतन्यस्वरूप 'अत एव' इससे ही 'विज्ञानमय' तै. 2, 4 इत्यादि श्रुतियों के कारण ही है। अब भाष्यकार शंकराचार्य के मत की समीक्षा करते हैं। ब्रह्म बिना सब मिथ्या है। इस प्रकार कहने वाले शंकराचार्य 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' आदि। ब्रह्म का वर्णन करने वाले वाक्यों को उदाहरण के लिये देकर ब्रह्म सूत्र में कहे सिद्धान्त को देखकर श्रुति और ब्रह्म सूत्र का उल्लंघन करने की धृष्टता करते हैं। इनको हमें पूछना चाहिये कि तुम जीव के ब्रह्मत्व का प्रतिपादन करते हो या जीव के जीवत्व का निराकरण करते हो? प्रथमविकल्प में

